दि संबन्धः शेषस्तत्र षष्ठी स्यात् उक्तञ्च कारकस्यापि संबन्धमात्रविवक्षायां ष
ष्ठेव सतां गतः सर्पिषो जानीते मातुः स्मरति एधोदकस्योपस्कुरुते भजे शंभोश्चर
णयोः फलानां तृप्तः कर्तृकर्मणोः कृति कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् तस्य
कृतिः जगतः कर्ता कृष्णः आधारोऽधिकरणं कर्तृकर्मद्वारा तन्निष्ठक्रियाया आ
धारः कारकमधिकरणं स्यात् सप्तम्यधिकरणे च चाद् दूरान्तिकार्थेभ्यः औपश्लेषिको वैष
यिकोऽभिव्यापकश्चेत्याधारस्त्रिधा कटे आस्ते स्थाल्यां पचति मोक्षे इच्छास्ति सर्व
स्मिन्नात्मास्ति वनस्य दूरे अन्तिके वा इति विभक्त्यर्थः समासः पञ्चधा तत्र समसनं
समासः स च विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः प्रायेण पूर्वपदार्थ
प्रधानोऽव्ययीभावो द्वितीयः प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः तत्पुरुष
भेदः कर्मधारयस्तद्भेदो द्विगुः प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः प्रायेणो

भयपदार्थप्रधानो द्वंद्वः पंचमः समर्थः पदविधिः पदसंबंधी यो विधिः स समर्था
श्रितो बोध्यः प्राक्कडारात्समासः कडाराः कर्मधारये इत्यतः प्राक् समास इत्यधिक्रि
यते सहसुपा समर्थं सुबंतं समर्थेन सुबंतेन सह वा समस्यते सुप्सुपा सह वा सम
स्यते समासत्वात्प्रातिपदिकत्वे सुपो लुक् परार्थाभिधानं वृत्तिः कृत्तद्धितसमासै
कशेषसनाद्यंता धातुरूपाः पंचवृत्तयः वृत्त्यर्थावबोधकं वाक्यं विग्रहः स च लौ
किकोऽलौकिकश्चेति द्विधा तत्र पूर्वं भूत इति लौकिकः विग्रहः वाक्यं पूर्वं चरट् इति
ज्ञापकाद्भूतशब्दस्य पूर्वनिपातः भूतपूर्वः इवेन नित्यं समासो विभक्त्यलोपश्च
वागर्थाविव इति केवलसमासः अव्ययीभावः अधिकारोऽयं प्राक् तत्पुरुषात्
अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चा
द्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु विभक्त्यर्थादिषु व

कृत्वा असमर्थनसंशब्दलौकिक कन नत्र समासे क्रने